# सङ्गीतमुक्तावली

## हरिचन्दन विरचिता

श्री वानाम्बराचार्यसाहित्याचार्य्य विद्याभूषणेन
सटिप्पणं सानुवादं च
सम्पादिता

उत्कल विश्वविद्यालयपक्षतः प्रकाशिता

प्रथम मुद्रण

मूल्यम् सार्द्धरूप्यकमितम्

# भूमिका

सङ्गीतशास्त्रं दुष्पारं दुरवगाहं च, तच्च गीतवाद्यनृत्यानां समवाय-रूपम्। तेषु गीतस्य प्राधान्यं सर्वसम्मतम्। यदुक्तं सङ्गीत-रत्नाकरे—

नृत्यं वाद्यानुगं प्रोक्तं वाद्यं गीतानुवर्त्ति च
अतो गीतं प्रधानत्वादत्रादावभिधीयते।

गीतस्य रञ्जक-स्वरापेक्षत्वात् स्वराणां च श्रुतिमूलत्वात् श्रुतेश्च नादोद्भवत्वात् तस्य ध्वन्यात्मकस्य विवेचनं ग्रन्थेऽस्मिन्नादौ कृतम्। तदुक्तं सङ्गीतपारिजाते—

नादाब्धेरपरं पारं न जानाति सरस्वती
अद्यापि मज्जनाद्भीता तुम्बीं वहति वक्षसि। इति।

तेन क्रमोऽयं स्वीकृतः ग्रन्थकृता। तस्मादुक्तमत्र ग्रन्थे—

नाद-श्रुति-स्वर-ग्राम-मूर्च्छना-तान-वर्णकाः
स्वरा ग्रहांशन्यासाख्या जातिश्चेति क्रमादिह।

एते नादादयः प्रथमग्रथने विवेचिताः

द्वितीयग्रथने गीतस्य लक्षणादिकं प्रस्तुतम्। गीतलक्षणविचारा-वसरे ग्रन्थकर्त्रा संगीतकौमुदीगीतप्रकाशकाराणां लक्षणे दोषमुद्भाव्य "गीतं रञ्जकधातुमातुसहितम्" इति सङ्गीतसारकारस्य कर्णाटवासिनः हरिनायकस्य मतं स्वमततयाऽङ्गीकुर्वन्नपि तदीयगीतघटक-धातु-पदस्य लक्षणं निरस्तवान्। सङ्गीतरत्नाकरेऽपि गीतप्रकाशोक्त गीतलक्षणसदृशं यद् गीतलक्षणं दृश्यते तदप्येतद्ग्रन्थकर्त्तुरनभिमत-मिति प्रतिभाति।

मातुलक्षणनिरूपणावसरे ब्रह्मरंहिताक्तं "गीतस्यावयवो धातु-रागादिर्मातुरुच्यते" इत्यप्यङ्गीकृतम्।

इतःपरं रागपदं निरूप्य तेषां रागाणामुत्पत्तिमाह—

रासक्रीड़ानुरक्ताभिः षोड़शसहस्रसंख्यकाभिर्गोपिकाभी रासे यत् पृथग्रूपेण तत्संख्यकानि गीतान्युच्चारितानि तानि प्रत्येकं रञ्जक-धातुमातुसहितायां रागविशेषाणामुत्पादकान्यभवन्। तेष्वष्टोत्तर-शतं ततश्च षट्त्रिंशद्रागा अवशिष्टाः साम्प्रतं जनमनांसि रञ्जयन्तः तिष्ठन्ति। सङ्गीतदर्पणे तु अन्यथा दृश्यते। तदुद्धृतं मतङ्गवचनं यथा—

शिवशक्त्योः समायोगाद्रागाणां सम्भवोऽभवत
पञ्चास्यात्पञ्चरागाः स्युः षष्ठश्च गिरिजामुखात्।
सद्योजातात्तु श्रीरागो वामदेवाद्वसन्तकः
अघोराद्भैरवोऽभूत्तत्पुरुषात्पञ्चमोऽभवत्।
ऐशान्याख्यान्मेघरागो नाट्यारम्भे शिवादभूत्
गिरिजाया मुखाल्लास्ये नटनारायणोऽभवत्।

एवं रागाणामुत्पत्तिप्रकारनिर्णये ग्रन्थकृतः स्वारस्यमेव प्रतिभाति। इतःपरं ग्रन्थकृता नारद-कोहल-मतङ्गादिपूर्वसूरीणां मताः रागाणां सलक्षणा मूर्त्तयः वर्णिताः। सङ्गीतरत्नाकरे रागमूर्त्तीना-मुल्लेखो नास्ति। अत्र रागलक्षणेषु अल्पत्व-बहुत्व-तारान्दोलितादि-पदानामुल्लेखः कृतः। परन्तु ग्रन्थकृता तल्लक्षणादिकं न प्रोक्तवान्। अतः सङ्गीतरत्नाकरोक्तमेषां लक्षणमत्र दीयते।

बहुत्वं—स्वरस्य साकल्येन स्पर्शः।

अल्पत्वं—द्विविधं। स्वराणामावृत्तेरभावः तथा ईषत्स्पर्शश्च।

अन्तर्मार्गः—गीतान्तदेशं विहाय मध्ये मध्ये स्वरस्यानावृत्तया-सह ईषत्स्पर्शा वा क्वचित् केवलेनानावृत्तया वा क्वचित् केवलेन ईषत्स्पर्शेन वा स्वरसंहतेः वैचित्र्यकारिणी शक्तिर्यदोत्पाद्यते तदा "अन्तर्मार्गः"

पुनः तिरिपादयः गमकभेदाः सङ्गीतरत्नाकरे रागा इत्युच्यन्ते। ते तु तिरिप-स्फुरित-कम्पित-लीनान्दोलित-वलि-त्रिभिन्न-कुरुला-हतोल्लासित-प्लावित-गुम्फित-मुद्रित-नामित-मिश्रिताः पञ्चदश। तेषां लक्षणं यथा सङ्गीतरत्नाकरे—

लघिष्ठडमरुध्वानकम्पानुकृतिसुन्दरः
द्रुततुर्य्यांशवेगेन तिरिपः परिकीर्त्तितः।
वेगे द्रुततृतीयांशसंमिते स्फुरितो मतः
द्रुतार्द्धमानवेगेन कम्पितं गमकं विदुः।
लीनस्तु द्रुतवेगेनान्दोलितो लघुवेगतः
वलिर्विविधवक्रत्वयुक्तवेगवशाद्भवेत्।
त्रिभिन्नस्तु त्रिषु स्थानेष्वविश्रान्तघनस्वरः।
कुरुलो वलिरेव स्याद्ग्रन्थिलः कण्ठ्यकोमलः
उल्लासितः स तु प्रोक्तो यः स्वरानुत्तरोत्तरान्
क्रमादुगच्छेत् प्लावितस्तु प्लुतमानेन कम्पनम्
हृदयङ्गमहूंकारगम्भीरो गुम्फितो भवेत्
मुखमुद्रणसंभूतो मुद्रितो गमको मतः
स्वराणां नमनादुक्तो नामितो ध्वनिवेदिभिः। इति

तृतीयग्रथने तालनिरूपणम्। अत्र लघुगुर्वादिपरिभाषा-कथनानन्तरं प्रबन्धाङ्गभूतानां आद्यादिनवतालानां सोदाहरणं लक्षणं प्रदर्शितम्। अत्रोदाहृतगीतानि प्रायश उत्कलभाषया रचितानि। तेषु कानिचित् ग्रन्थकृतः स्वीयानि। अथ चञ्चत्पुटादीनि एकोत्तर शततालानि नामतो निर्दिश्य तेषां लक्षणानि दत्तानि। यत्र यत्र वा हरिनायक-मम्मठाचार्य्ययोः सङ्गीतसार-सङ्गीतरत्नमालाख्ययोः ग्रन्थयोर्लक्षणेन सह, एतद्ग्रन्थस्थ लक्षणस्य भेदः दृष्टः टिप्पण्यां तत् तत्स्थलेषु लक्षणान्तरस्य समुल्लेखः कृतः।

चतुर्थने गीतभेदाः प्रदर्शिताः । प्रबन्धघटकधातूनां चतुर्विधत्वं स्वीकुर्वन्नपि ग्रन्थकृत् स्वमते उद्ग्राहध्रुवाभोगरूपेण त्रिविधत्वं प्रदर्शितवान् । पद-स्वर-तेन-पाट-ताल-विरुदानीति षण्णां प्रबन्धाङ्गानां निर्देशपूर्वकं अङ्गसंख्याभेदेन नामभेदं निरूप्य शुद्ध-छायालगक्षुद्रनाम्ना त्रिधा विभक्तानां तेषां प्रत्येकमुपविभागान् लक्षयति । तेषु पाञ्चालीति नाम प्रबन्धविशेषो वर्त्तते । प्रतापरुद्रीय-यशोभूषणं नामालङ्कारग्रन्थे चतुराद्यष्टावधिकपादाढ्यं क्षुद्रगीतं भवेदिति नियमो दृश्यते । पाञ्चाल्याः क्षुद्रगीतान्तर्गतत्वेऽपि अष्टाधिक-पादाढ्यत्वं हि विशेषः । तेनास्मिन् ग्रन्थे—"अतिविस्तारपदता पञ्च प्रोक्ता मनीषिभिः । सा यत्रास्तीति पाञ्चाली विज्ञेया भरतादिभिः ।" इति लक्षणं कृतम् । अतिविस्तारपदता पदस्य अष्टाधिकपदवत्ता पवार्थः । उत्कलभाषानिबद्धछान्दप्रबन्धो ह्यस्योदाहरणस्थलम् । "प्राकृतं स्कन्धकादि च" इति दण्डिना प्राकृतकाव्यानां स्कन्धसंज्ञा कृता । तस्यच उत्कलभाषायां 'छान्द' इति संज्ञा । क्षुद्रगीतलक्षणे-ऽपि "स्कन्धसमन्विताः" इत्यत्र स्कन्धशब्दस्य परिच्छेदार्थता प्रताप-रुद्रीय-यशोभूषणटीकायां दृश्यते । रागतालयोर्निर्देशात् यद्भः प्रबन्धः जात्या तारावलीत्यभिधीयते । सङ्गीतरत्नाकरे एतस्याश्चम्पूरिति नामान्तरमस्ति । अपरं च विषयदृष्ट्या प्रबन्धानां नामान्तराणि च दृश्यन्ते । तद्यथा—यत्र देवनृपतीनां विजयादिवर्णनं तत् उदाहरणम् । कालिदासेन जयोदाहरणस्य माघेन भोगावल्याश्च नाम यथाक्रमं स्वरचिते रघुवंशे तथा शिशुपालवधे च व्यवहृतम् । यथा—"जयोदाहरणं बाह्वोर्गापयामास किन्नरान्" इति रघौ । "भोगावलीं कलगिरोऽवसरेषु पेठुः" । इति माघः । पदस्य आवृत्तिवशात् प्रबन्धानां नाम भिद्यते । अन्या च कोइलि इति ख्याता प्रबन्धजाति-रुत्कलेषु प्रचलिता दृश्यते । अत्र प्रतिपदं आदौ तथान्ते च "कोइलि" पदस्य आवृत्तिर्भवति । सङ्गीतरत्नाकरेऽस्य मूलं लक्ष्यते । तत्र 'ओवी' 'लोली' इति पदद्वयस्य प्रतिपदान्तमावृत्त्या 'ओवी' नाम्ना

'लोली' नाम्ना च प्रबन्धद्वयं आख्यातं भवति । तयोर्मिश्रणव्यत्यासाभ्यां 'कोइलि' इत्यस्य सृष्टिः । एवं विचारे कृते उत्कलीय प्राचीनरचनावली सङ्गीतशास्त्रं साफल्येनानुसरतीति ज्ञायते। इदमत्र ज्ञेयं यत् बङ्गेषु पाञ्चाल्याख्यं गीतं वर्त्तते। परन्तु तस्या या व्युत्पत्तिस्तत्रत्यैः सुधीभिर्निर्दिश्यते सा तु न मनोरमा। तस्मिन्नेव देशे वैष्णवानां या अष्टापद्यः गीतिका वर्त्तन्ते तास्तु पदमिति कथ्यते। अष्टभ्यः पदेभ्योऽधिकानि पदानि यत्र ता गीतिकाः पाञ्चाल्य इति समीचीना युक्तिः। अतः सङ्गीतमुक्तावल्युक्तं लक्षणमनुसृत्य पञ्चभिः बहुभिः अलते शोभते या सा पाञ्चालीति व्युत्पत्तिं वयं निर्दिशामः।

गीतं वाद्यं (तालं) च विवृत्य समासतो नृत्यप्रकरणमुक्तवान् ग्रन्थकारः। पुंस्त्रीकर्त्तृकतया ताण्डवलास्यभेदेन द्वैविध्यमुक्तम्। नृत्यं नर्त्तनमिति भेदद्वयमुक्तवान्। तदनन्तरं काष्ठी-मण्डली-जाकड़ी-शावर-कुरुञ्ज्याख्यानां लोकनृत्यानां नामलक्षणे लिखित्वा ग्रन्थसमाप्तिं व्यदधात्।

## ग्रन्थाप्तिः

ग्रन्थोऽयं मया केन्दुझरगड़वासिनः श्री वैष्णवचरण पट्टनायकस्य ग्रन्थागाराल्लब्धः। परन्तु पुस्तकस्यान्ते श्री विश्वेश्वर भञ्जदेव महाराजस्य पठनार्थं लिखितमिति पाठोऽस्ति। इयं मुक्तावली चतुर्भिर्ग्रथनैः समापिता। प्रतिग्रथनान्ते ग्रन्थकर्त्तुः परिचयः स्पष्टं लिखितोऽस्ति। तस्मात् ज्ञायते यत् लेखकस्य नाम हरिचन्दन इति। स तु कनिकाराजस्य गोपीनाथ भञ्जस्य पुत्र आसीत्। तेन वीरवर राजकुमार इति सर्वत्र नाम्नः प्राक् व्यवहृतम्। कनिका-राजवंशेतिहासादवगम्यते यत् गोपीनाथभञ्जः ख्रीष्टीये १५५२ तमेऽब्दे कनिकासिंहासनमधिरूढवान्। अतः तत्तनयः हरिचन्दनः ख्रीष्टीय शोड़शशताब्द्या नवमदशकानन्तरं इमं ग्रन्थं रचितवान् इति सम्भाव्यते। अपरं च यवनानामुत्कलाक्रमणं तु तस्मिन्

समये एवाभवत्। मुकुन्ददेवस्य मृत्युना साकमुत्कलस्य स्वाधीनता चिरायास्तमिताऽभवत्। समग्रो देशः सर्वथा यवनैरुपद्रुतस्तिष्ठति स्म। अतः ग्रन्थकारेणोक्तं—

"स्वीयां महीं यमन (यवन) जालमहाब्धिमग्नां, बाढं वराह इव यः सहसोद्दधार"। इति। अन्यच्च—ग्रन्थेऽस्मिन् हरिनायकस्य नाम तस्य ग्रन्थस्य च नाम अस्ति। स तु कर्णाटवासी सङ्गीतसारस्य कर्त्ता १६०० तमेऽब्दे वा तत्पूर्वं वर्त्तमान आसीत् इति। A. H. Strangway नाम विद्वान् स्वकीये Music of Hindustan नामके ग्रन्थे लिखितवान्। पुनरत्र सङ्गीतनारायणस्य नाम दृश्यते। पुरुषोत्तममिश्रनारायणदेवनामानौ द्वौ कृतिनौ तुल्याख्यग्रन्थद्वयं रचितवन्तौ। उभावपि तावुत्कलवासिनौ। तयोरवस्थितिकालस्तु यथाक्रमं १७०३-१७६५ मिताब्दाभ्यामीषत् प्रागवर्त्तित्वेन पूर्वोक्त विदुषा निर्द्धारितः। अतः ग्रन्थेऽस्मिन् सङ्गीतनारायणस्य नाम केनचित् प्रतिलिपिकरेण वा पाठकेन वा परवर्त्तिनि काले प्रक्षिप्तं ग्रन्थान्तरित्यनुमीयते। ग्रन्थकारस्य जनकात् गोपीनाथभञ्जादारभ्य वर्त्तमान कनिकाधिपं श्री शैलेन्द्रनारायणभञ्जदेवं यावत् गणनायां कृतायां एकविंशपुरुषा व्यतीता इति ज्ञायते। अतः ग्रन्थस्य रचनाकालः पूर्वोक्तादब्दादर्वाक् भवितुं नार्हति। प्राचीनकनिकाराजानां देशप्रीति यथा महती वीरता च तथा प्रथीयस्यासीदितीतिहासविदां मतम्। एते च यथा शस्त्रेषु तथा शास्त्रेष्वपि कुशला आसन् इति पुस्तकमिदं प्रमाणयति।

ग्रन्थस्यास्य सम्पादनेऽहमात्मानमयोग्यतमं मन्ये। सङ्गीतविद एव एतस्य पठनेन यदि प्रसादमधिगच्छेयुरिति कृत्वा मयाऽस्मिन्नकृतावगाहे पदं कृतम्। नूनमत्र दोषा भविष्यन्ति। यतः सुलभदोषा हि मनुष्याः। लोकलोचनगोचरतां निनीषुणा कोरकीकृतकरेण मया तत्रभवत्सु विद्वत्सु क्षमार्थं निवेद्यते। मुद्रणेऽपि कुत्रचित् दोषो वर्त्तेत चेत् तदपि क्षमणीयमिति मे प्रार्थना। अत्र

पुस्तके अस्मद्देशोच्चारणानुरूपं 'व' 'ब' कारयोर्भेदस्तु सर्वत्र न रक्षितः। प्रमादमिमं गुणग्राहिणः सुधियो मर्षयिष्यन्तीति आशास्यते।

पुस्तकमिदं कनिकाधिपतिना श्री शैलेन्द्रनारायणभञ्ज देववर्म्मणा उत्कलविश्वविद्यालयस्य कुलपतीनां करे न्यासीकृतेनार्थेन मुद्रितमिति राजमहोदयेषु गभीरकृतज्ञता ज्ञाप्यते।

पुस्तकमिदमुत्कलविश्वविद्यालयप्रकाशितेषु पुस्तकेषु प्रथमं सङ्गीतशास्त्रम्। अन्यानि च बहूनि ग्रन्थरत्नानि विश्वविद्यालय ग्रन्थागारे रक्षितानि वर्त्तन्ते। अधुना कुलपतिपदमलंकुर्वतां विद्वद्गोष्ठीवरिष्ठानां लोकविश्रुतानां पद्मभूषणपदवीभाजां श्री प्राणकृष्ण परिजामहोदयानां प्रयत्नेन तानि नूनमचिरं सुधीजन-लोचनगोचरतामायास्यन्तीति मादृशामाशा न मोघा भविष्यति। इति।

अज्ञानाद्वा प्रमादाद्वा चलत्वान्मनसोऽपि वा
असाधु लिखितं यद्यत्तच्छोध्यं विचक्षणैः॥

खीष्ट कलेज
कटक
१९५५

इत्यर्थ्यते
साहित्याचार्य्यविद्याभूषणोपनामा
श्री वानाम्बराचार्य्यशर्मा
संस्कृतोत्कलभाषाध्यापकः

# विषयानुक्रमणी

## प्रथम-ग्रथनम्



## द्वितीय ग्रथनम्

## तृतीय ग्रथनम्



## चतुर्थ ग्रथनम्

# सङ्गीतमुक्तावल्युद्धृत ग्रन्थानां नामानि

१। भरतनाट्यशास्त्रम्
२। विष्णुपुराणम्
३। शिवसंहिता
४। कोहलीय
५। नारदसंहिता
६। सङ्गीतकौमुदी
७। गीतप्रकाशः
८। सङ्गीतसारः (हरिनायकः)
९। ब्रह्मसंहिता
१०। मतङ्गतन्त्रम्
११। सङ्गीतरत्नमाला (मम्मठाचार्य्य)
१२। कलाङ्कुरनिबन्धः
१३। पञ्चमसारसंहिता
१४। रागविवेकः
१५। संगीतचन्द्रिका
१६। सङ्गीतनारायणम्
१७। वाङ्मयविवेकः
१८। शिवविनोदप्रबन्ध (उत्कलभाषाग्रन्थः)
१९। सङ्गीतदामोदरः
२०। गीतगोविन्दम्

# संगीतमुक्तावली



## प्रथमग्रथनम्

सानन्दं मन्दमन्दं व्रजयुवतिततिस्फीतगीतप्रसक्ति—
प्रोद्यद्भावावबोधाकुलगतिविलसद्रासनृत्यानुरक्तम् ।
वन्द्यं वन्दारुवृन्दारककरविलसत्तालिकावाद्यलीलम्
वन्दे वृन्दावनेशं स्मितललितमुखं कृष्णमानन्दकन्दम् । १ ।

व्रजवासिनी गोपयुवतीमाने सानन्दमनरे धीरे धीरे आवेगमय गीत गान करन्ते, ये भावविष्टभावे चञ्चल पदनिक्षेप करि रास नृत्यरे अनुरक्त होइथिले; एणे स्तुति करिबापाइ आसिथिबा देवतामाने याहाङ्कर नृत्यानुसारे करतालि वजाइ ताल देउथिले, याहाङ्कर मुख मन्दहासरे रमणीय होइथिला, ये आनन्दर मूल उत्सस्वरूप, सेहि वन्दनीय वृन्दावनेशङ्कु नमस्कार करुअछि । १ ।

वशिष्ठमुनिपालिताः श्रुतिमयूरिकानिर्गता
नृपत्वमनुलम्भिताः स्मितमुखेन सीताभृता ।
गणेशवरदार्पिताः सकलधर्मकर्मान्विताः
नृपाः समभवन् क्षितावनुदिनं सुवीरव्रताः । २ ।

एहि पृथिवीरे सर्वविध धर्मकर्मरे प्रवीण, सर्वदा वीरव्रतपालनदक्ष गोटिए राजवंश अछन्ति । सेमानङ्कर आदिपुरुष ( गणदण्ड वीरभद्र ) मयूररूपधारिणो ( श्रुति ) वेदमाताङ्क गर्भरु जात होइ महर्षि वशिष्ठङ्क द्वारा परिपालित होइथिले । तत्परे सीतापति श्रीराम ताहाङ्कु राजपद प्रदान करिथिले । अतन्तर ताङ्क वंशधरमाने ( हेरम्ब ) श्रीगणेशङ्कठारु वरप्राप्त होइ अत्यन्त प्रतापशाली होइथिले । २ ।

येषामासेतुशीताचलविमलमिलत्कीर्त्तिराशिं स शेषो
निःशेषं नैव शक्तो विपुलगुणगणान् वक्तुकामोऽपि वक्तुम् ।
येरक्षालि क्षणेन क्षतरिपुनिवहक्षत्रियक्षौणिपाल—
स्कन्धप्रस्यन्दिरक्तप्रकरजलनिधौ साधु कौक्षेयकौघः । ३ ।

शेषदेव (वासुकि) मध्य सेमानङ्कर सेतुबन्धठारु हिमाचल पर्य्यन्त व्यापिथिवा कीर्त्ति-राशिकु तथा सेमानङ्कर बिपुल गुणावलीकु निःशेषभावे कहिबापाइ इच्छुक हेले बि कहि पारिबे नाहिँ। सेमाने निज तरबारीकु बहुशत्रुविनाशक क्षत्रियराजगणङ्कर खण्डित स्कन्धरु उद्गत रक्त समुद्ररे प्रक्षालित करुथिवे । ३ ।

प्रोद्यत्कर्ण्णाटलाटद्रविड़मरहट्टाटोपगौड़ोढ्रचोड़—
भ्राजन्मल्लारकाश्मीरककलवरकक्षत्रियक्षोणिपालान् ।
ये निर्जित्य क्षणेनातुलविपुलभुजातेजसाऽखण्डभूमिम्
स्वीयां कान्तामिवाब्धिप्रचुरतरमहामेखलां भुञ्जते द्राक् ।४।

एहि भञ्जवंशीय राजामाने निजर प्रबल बाहुबलरे कर्ण्णाट, लाट, द्राविड़, मरहट, गौड़, ओढ्र, चोड़, मल्लार, काश्मीर, कलवर प्रभृति देशर क्षत्रियराजामानङ्कु जिणि समुद्रमेखलाधारिणी भूमिरूपा निज कान्ताकु उपभोग करुअछन्ति । ४ ।

भञ्जनाच्छत्रुसैन्यानां किंवा डिम्बस्य भञ्जनात् *
ते भञ्जा इति विख्याताः क्षत्त्रियाः सूर्य्यवंशजाः । ५ ।

एहि सूर्य्यवंशीय राजामाने शत्रुसैन्यकु भञ्जन करिथिबारु हेउ, अथवा मयूर-डिम्बकु भाङ्गि जात होइथिवा हेतु हेउ, 'भञ्ज' नामरे विदित हेउथिले । ५ ।

येषां भारतभूसरोरुहमिलन्मध्यस्थली— कर्णिका
ब्राह्मी—वैतरणी—समागममिलत्कल्लोलमाध्वीकिका ।
यस्यां श्रीर्दनुजेन्द्रदारुणशरव्राताऽतिपाताद्भिये—
वास्ते निश्चलतामुपेत्य नृहरेर्वक्षः परित्यज्य पूः । ६ ।
त्रिलोचनमहीपतिर्विमलभञ्जवंशाम्बुधेः
सुधाकर इवापरः खलु तमोऽन्धदृष्टिप्रदः ।
जनव्रजकुमुद्वतीं प्रमदयन् करैः कोमलै—
र्द्विजव्रजविवर्द्धनः समुदियाय गां पालयन् । ७ ।

येउँ (कर्ण्णिका) कनिका राज्य भारतभूमिरूप पद्मर मध्यस्थलवर्त्ती—कर्णिकारूपे अवस्थित, सम्मिलित ब्राह्मी ओ वैतरणीर कल्लोलमाला याहार मकरन्द सदृश, येउँठारे लक्ष्मी दानवराजर निष्ठुरशरपातभयरे नृसिंहङ्क बक्षोदेश परित्याग करि निश्चल होइ

*डिम्बः स्त्रीहानि विप्लवे इति कोषात्

बास करु अछन्ति, सेहि कर्णिका (कनिका) राज्यरे निर्मल भञ्जकुलरूप समुद्ररु द्वितीय चन्द्र स्वरूप त्रिलोचन नामक राजा जात होइथिले। से अज्ञानरूप अन्धकाररे बणा हेउथिबा व्यक्तिमानङ्कु दिव्यज्ञानरूप दृष्टिप्रदान करुथिले। आहुरि मध्य प्रजारूप कुमुदबनकु कोमल करद्वारा (राजपक्षे; अल्पपरिमाणरे करग्रहण करिबाद्वारा; चन्द्रपक्षे शीतल किरणद्वारा) आनन्दित करुथिले, द्विज (ब्राह्मण) मानङ्कर परिपालनपूर्बक पृथिबीकु शासन करिबाकु उदित होइथिले। ६-७।

वीरस्तस्माद्बभूव प्रचुरपरतमःस्तोममार्त्तण्डमूर्त्तिः
श्रीगोपीनाथभञ्जो नृपमुकुटमणिश्रेणिनीराजितांघ्रिः।
यस्योद्यद्दानधाराजलनिधिजनितः कीर्त्तिचन्द्रा दिगन्त–
क्ष्मादेव व्रातवेल्लत्कुमुदकुलमलं नन्दते निष्कलंकः। ८।

ताङ्कठारु गोपीनाथ भञ्ज नामरे जणे राजा जात हेले। से सूर्य्य सदृश तेजस्वी थिले ओ शत्रुरूप घनान्धकारकु बिनाश करिथिले। ताङ्कर चरण बीरबृन्दङ्क मुकुटमणिर किरणद्वारा अर्चित हेउथिला। ताङ्क प्रदत्त दानजलधाराजनित समुद्र मध्यरु येउं निष्कलङ्क कीर्त्तिचन्द्र उदित होइथिला ताहा ब्राह्मणबर्गरूप कुमुदसमूहकु आनन्दित करुथिला। ८।

जातस्तस्माद्गुणिगणचणः कोबिदानन्दकन्दो
वन्द्यो भूपैः स खलु परमानन्दभक्तो नृपेन्द्रः।
श्रीमद्राधारमणचरणाम्भोज-माध्वीकमत्तो—
दानी मानी सुनयनिपुणश्चन्द्रबिभ्राजकीर्त्तिः। ६।

ताङ्कठारु गुणिगणाग्रगण्य बिद्वान्मानङ्कर आनन्दोत्पादक राजगणङ्कद्वारा अर्चित परमानन्द नामक जणे भक्त राजा जात होइथिले। से राधामाधबङ्कर चरणकमलर मकरन्द आस्वादन करि प्रेमबिह्वल हेउथिले। से दानी, मानी ओ नीतिशास्त्ररे निपुण थिले। ताङ्क कीर्त्ति चन्द्रपरि उज्ज्वल ओ निष्कलङ्क थिला। ९।

श्री गोपि (१) नाथ नृपते र्ननु भक्तिबीरा—
दासीत् सुतः स गुणवान् हरिचन्दनाख्यः।
क्षीयां महीं यमन (यवन) जाल महाब्धिमग्नां (२)
बाढं वराह इव यः सहसोद्धार। १०।

१—गोपिनाथ इत्यत्र संज्ञाबिषयत्वात् कालिदासादिबत् ह्रस्वत्व।

२—यमन इत्यत्र यवन इति पठितव्यं। उत्कल भाषायां प्राचीनपुस्तके यवनस्य यमन, दमन इति च रूपान्तरं दृश्यते।

पूर्बोक्त भक्तिबीर गोपीनाथङ्कठारु हरिचन्दन नामक पुत्र जात होइथिले। से गुणबान् थिले। बराह अबताररे बिष्णु प्रलय समुद्रजलरु पृथिबीकु उद्धार कलापरि से यबनसैन्यरूप समुद्ररे बुड़ि याइथिबा निज जन्मभूमिकु तत्क्षणात् उद्धार करिथिले।१०।

**तेनाद्य नानामुनिसंप्रणीतात् सङ्गीतशास्त्रार्णवतोऽतियत्नात्।**
**संगीतमुक्तावलिरार्यतुष्ट्यै संपाद्यते रागगुणैकनद्धा। ११।**

अधुना सेहि हरिचन्दन नाना मुनिप्रणीत सङ्गीतशास्त्ररूप समुद्र मध्यरु एहि सङ्गीतमुक्ताबलीकु अति यत्नसहकारे उत्तोलन करि साधुमानङ्क सन्तोष पाइँ अनुराग सूत्ररे ग्रथित करुअछन्ति।११।

**संगीतमुक्तावलिराशु हृद्या सतां प्रमोदं तनुतादियं सा।**
**न वालिशानां हि यतः कपीनां रोषाय तोषाय न कण्ठभूषा।१२।**

एहि सङ्गीतमुक्ताबली साधुमानङ्कर आनन्दबर्द्धन करु। मूर्खमाने एथिरु आनन्द उपभोग करि पारिबे नाहिं। देख, हार केबे हेले बानरमानङ्कर सन्तोष उत्पादन करिपारे कि? १२।

**अथ परमकारुणिको भगवान् भरतमुनिः सकलजनावलिं कलिकलुषकुण्ठितधियमवलोक्य परमसुकृतैकलभ्यं चतुर्वर्गमनायासेन लब्धुं सुखोपायं सकलजनहिताय संगीतमाह।१३।**

परमदयालु भगवान भरतमुनि कलिजनित पापहेतु समस्त जगत्बासीङ्कर जड़बुद्धिता देखि सेमानङ्क अनायासरे धर्मादि चारिबर्गर अधिकारी कराइबा उद्देश्यरे परमपुण्यमात्र लभ्य सुखर प्रकृष्ट उपायस्वरूप सङ्गीतशास्त्रकु लोकहितकामनारे प्रचार करिथिले।१३।

**यतः—त्रिवर्गफलदाः सर्वे दानयज्ञस्तवादयः**
**एकं संगीतविज्ञानं चतुर्वर्गैकसाधनम्।**
**चतुर्वर्गफलप्राप्तिर्यतः संगीततो भवेत्।**
**तस्मात् संगीतमध्येयं सुखिभिर्भूमिपैरिदम्।१४।**
**एतेन प्रयोजनमुक्तं संगीतस्य।**

येहेतु:—दान, यज्ञ प्रभृति धर्म, अर्थ ओ कामरूपक तिनि बर्गकु प्रदान करन्ति, किन्तु सङ्गीतशास्त्र चतुर्बर्ग प्रदायक। तेणु सुखी (धनी) ओ राजामाने सङ्गीतशास्त्र पढ़िबा उचित।१४।

कथं चेदित्याह—

हरीशादेः स्तुतौ धर्मो धनकामौ नृपादितः

निष्कामं तदनुष्ठानात् मोक्षस्तस्मात्तदभ्यसेत् । १५ ।

बिष्णु, शिब प्रभृतिङ्क स्तुतिकु सङ्गीताकाररे गान कले धर्म, राजा ओ धनी ब्यक्तिङ्क निकटरे सङ्गीत गान कले अर्थ एवं काम, निष्काम-भाबरे सङ्गीतर अनुष्ठान कले मोक्षलाभ हुए ।१५।

संगीतस्य प्रयोजनमुक्त्वोत्पत्तिमाह—

पुरा चतुर्णां बेदानां सारमाहृत्य पद्मभूः

इदं तु पंचमं बेदं संगीताख्यमकल्पयत् । १६ ।

सङ्गीतर उत्पत्तिः—ब्रह्मा चारि बेदर सार संग्रह करि पञ्चमबेदरूपे सङ्गीतशास्त्रकु प्रबर्त्तित करिथिले । १६ ।

कस्मात् किमुत्पन्नमित्याह—

ऋग्भ्यः पाठ्यमभूद्गीतं सामभ्यः समपद्यत ।

यजुर्भ्योऽभिनया जाता रसा अथर्वणः स्मृताः ।१७।

ऋग्बेदरु पाठ्य, सामबेदरु गीत, यदुर्बेदरु अभिनय ओ अथर्बबेदरु रस उत्पन्न होइथिला । १७ ।

प्राशस्त्यमाह—

श्रुतिस्मृत्यादिसाहित्य—नानाशास्त्रबिदोऽपि च ।

संगीतं ये न जानन्ति ते द्विपादो मृगाः स्मृताः । १८ ।

बेद स्मृति ओ साहित्य प्रभृति नानाशास्त्र जाणि सुद्धा संगीत न जाणिथिबा मनुष्य 'दिगोडिआ' पशु अटे । १८ ।

संप्रदायशुद्धिमाह—

बिष्णुः शिबस्तथा ब्रह्मा दुर्गा नारद एव च

भरतो राबणो रम्भा हनुमान् बायुरेव च ।

कोहलः कश्यपो हाहा हूहूर्नन्दी सरस्वती

एते संगीतशास्त्रस्य पूर्वाचार्य्याः प्रकीर्त्तिताः । १९ ।

सङ्गीतर पूर्बाचार्य्यगण :—बिष्णु, शिब, ब्रह्मा, दुर्गा, नारद, भरत, राबण, रम्भा हनुमान्, बायु, कोहल, काश्यप, हाहा, हूहू, नन्दी ओ सरस्वती एमाने सङ्गीतशास्त्रर प्रबर्त्तक । १९ ।

किं स्वरूपं संगीतमित्याह, भरते—

गीतं वाद्यंञ्च नृत्यं च त्रयं संगीतमुच्यते ।
गीतवाद्यउभे एव संगीतमिति केचन
तच्चतुर्द्दशलोकानामिदमेव मनोहरम् । २० ।

सङ्गीत स्वरूप :—गीत, बाद्य ओ नृत्य एहि तिनि गोटिर मिश्रणरे सङ्गीतर उत्पत्ति, एहा भरत कहि अछन्ति । गीत ओ बाद्य एहि दुइटिर मिश्रणकु मध्य केहि केहि सङ्गीत कहिथान्ति । एहा चउदभुबनर प्रीतिप्रद । २० ।

बिष्णुपुराणेऽपि—

काव्यालापाश्च ये केचिद्गीतकान्यखिलानि च ।
शब्दमूर्त्तिधरस्यैते बिष्णोरंशा महात्मनः । २१ ।

बिष्णुपुराणरे मध्य समस्त काव्य ओ समस्त प्रकार गीत शब्दमूर्त्तिधर बिष्णुङ्कर अंश बोलि उक्त होइछि । २१ ।

संगीतस्वरूपमुक्त्वा विभागमाह—

मार्गदेशीविभेदेन संगीतं भवति द्विधा
स्वर्गे वै मार्गसंगीतं मर्त्ये देशी मनोरमम् । २२ ।

सङ्गीत बिभाग :—मार्ग ओ देशी भेदरे सङ्गीत दुइ प्रकार । मार्ग सङ्गीत स्वर्गरे प्रचलित ओ देशी सङ्गीत मर्त्यरे प्रचलित । २२ ।

यतो गीतं पुरःप्रोक्तं तस्य नादं बिनाऽभवः ।
तस्मान्नादः प्रयत्नेन ज्ञातव्यो गीतकोबिदैः । २३ ।

नाद ब्यतीत गीतर उत्पत्ति असम्भब । तेणु सङ्गीतजिज्ञासु ब्यक्ति नादबिषयरे ज्ञान अर्जन करिबा उचित । २३ ।

तदुक्तमाचार्य्यैः—

न नादेन बिना गीतं न नादेन बिना स्वरः
न नादेन बिना रागस्तस्मान्नादात्मकं जगत । २४ ।

पूर्बाचार्य्यमाने कहिअछन्ति ये "नादकु छाड़ि गीत नाहिं कि स्वर नाहिं, कि राग नाहिँ । अतएब जगत् नादमय ।" २४ ।

उत्पत्तिप्रकारमाह —शिव संहितायां—

आत्मा विवक्षमाणोऽयं मनः प्रेरयते यतः
देहस्थं बह्निमाहन्ति स प्रेरयति मारुतं * । २५ ।

नादर उत्पत्तिप्रकारः—शिब संहितारे उक्त होइछि ये, आत्मा कौणसि भाब, प्रकाश करिबाकु इछा कले प्रथमे मनकु प्रेरणा दिए, मन देहस्थित अग्निकु आघात करे । तत्परे अग्नि बायुकु प्रेरणा दिए । तहुँ नादर उत्पत्ति हुए । २५ ।

नकारः प्राणपबनो दकारोऽग्निरुदीरितः,
पवनाग्निसमुत्पन्नो नादः शब्दप्रकाशकः । २६ ।

न शब्दर अर्थ—प्राणबायु ओ द शब्दर अर्थ—अग्नि । ए दुहिङ्क मिलनरे नादर उत्पत्ति हेउथिबारु ताहार एप्रकार संज्ञा करायाइछि । २६ ।

हृदि मन्त्र (न्द्र) स्तथा कण्ठे मध्यस्तारस्तु मूर्द्धनि,
द्विगुणः परिमाणेन पूर्वपूर्वतरो भवेत् । २७ ।

हृदय देशरे येउँ नाद उत्थित हुए ताहाकु 'मन्त्र' बा 'मन्द्र' कहन्ति । कण्ठदेशरे उत्पन्न नादर नाम 'मध्य' ओ मूर्द्धारे उत्पन्न नादर नाम 'तार' अटे । 'मन्द्र'ठारु 'मध्य'र शक्ति दुइगुण ओ 'मध्य'ठारु 'तार'र शक्ति दुइगुण अटे । २७ ।

किम्बा—

आकाशाग्निमरुज्जातो नाभेरूर्द्ध्वं समुच्चरन् ।
मुखेऽभिव्यक्तिमायाति यः स नादः प्रकीर्त्तितः । २८ ।

नादर आउ गोटिए लक्षणः—नाद आकाश अग्नि ओ बायुर संयोगरे जात होइ नाभिठारु ऊर्द्ध्वकु गति करि शेषरे मुखरे अभिव्यक्ति लाभ करे । २८ ।

कोहलीये तु—

आहतोऽनाहतश्चेति नादोऽत्र द्विविधो मतः
संयोगजन्यो यो नादः स आहत इहोच्यते ।
संयोगव्यतिरेकेण यो नादः श्रूयते बुधैः
अनाहतः स विज्ञेयो नादः ब्रह्मेति कीर्त्तितं । २९ ।

---

* नादस्तु प्राणिजोऽप्राणिजः प्राण्यप्राणिजश्चेति त्रिधा—शारीरः प्राणिजो अप्राणिजा बीणासम्भबस्तथा । प्राण्यप्राणिभबो बंशीभबश्चेति त्रिधा हि सः । सं० रत्न० ।

कोहलंक मतरेः—आहत ओ अनाहत भेदरे नाद दुइ प्रकार। कौणसि दुइ पदार्थर संयोगरे येउँ नाद उत्पन्न हुए, ताहा आहत। संयोग व्यतिरेके येउँ नाद शुणायाए, ताहाकु पण्डितमाने अनाहत नाद कहन्ति। ताहार अपर नाम नादब्रह्म। २९।

आहतभेदाः—

आहतः सप्तधा जातः पुनः षड्जादिभिः स्वरैः।

केन रूपेण स नादः षड्जादिस्वरभेदतां प्राप्य सप्तप्रकारोऽभवत्। ३०।

आहत नादर भेदः—आहत नाद षड्ज, ऋषभ, गान्धार, मध्यम, पञ्चम, धैवत ओ निषाद एहि सात स्वररूपे सप्त प्रकार होइ प्रकाश पाए। ३०

तदाह—

नादाच्च श्रुतयो जाताः श्रुतिभ्योऽपि स्वरास्तथा
स्वरेभ्यो मूर्च्छनास्ताभ्यस्तानास्त्रिग्रामसंभवाः। ३१।

पूर्वोक्त नाद केउँपरि षड्जदि स्वररूपे सात प्रकार होइछि बर्त्तमाम ताहा कहुअछन्ति :— नादरु श्रुति, श्रुतिरु स्वर, स्वररु मूर्च्छना, मूर्च्छनारु तान ओ ताहँरु ग्रामत्रय जात होइअछन्ति। ३१।

ग्रन्थान्तरेऽपि पुनः—

नाद–श्रुति–स्वर–ग्राम–मूर्च्छना–तान–वर्णकाः
स्वरा ग्रहांशन्यासाख्या जातिश्चेति क्रमादिह। ३२।

ग्रन्थान्तररे एहा भिन्न प्रकाररे उक्त होइछि। यथा—नादरु श्रुति, श्रुतिरु स्वर, स्वररु ग्राम, ग्रामरु मूर्च्छना, मूर्च्छनारु तान, तानरु बर्ण। बर्णरु ग्रह स्वर, न्यासस्वर ओ अंशस्वर, तहिँरु जाति यथाक्रमे उत्पन्न होइछि। ३२।

नादमुक्त्वा नादजन्याः श्रुतयः उच्यन्ते—

द्वाविंशतिस्तिर्यगूर्द्ध्वा नाड्यो हृदयमाश्रिताः
तासु नादः संप्रविष्टे वहिरूर्द्ध्वं समुच्चरन्।
* श्रुतयो नादभेदेन द्वाविंशतिरुदीरिताः
क्रमादुच्चोच्चता तासां वीणादावेव लक्षिता।
कण्ठे तु कफसंदुष्टो श्रुतयो नैव लक्षिताः। ३३।

---

* प्रथमश्रवणाच्छब्दः श्रूयते ह्रस्वमात्रकः। सा श्रुतिः संपरिज्ञेया स्वरावयव लक्षणा
श्रुतिर्नाम स्वरारम्भकावयवः शब्दविशेषः। इति मल्लिनाथः ( शिशुपालवधटीकायां )

नादस्वरूप कुहागला परे एबे नादरु उत्पन्न श्रुतिसम्बन्धरे कुहायाउछि:—हृदयरे तिर्यक्भावे ऊर्द्ध्वगामी होइ २२टि नाड़ी अछन्ति। सेमानङ्क मध्यरे नाद प्रविष्ट होइ ऊर्द्ध्व मुखरे बाहारकु बाहारिले ताहाकु श्रुति कहन्ति। नादर संख्यानुसारे एहा बाइशि प्रकार होइथाए। पूर्ब पूर्ब अपेक्षा पर पर श्रुतिगुड़िक क्रमशः उच्च हुअन्ति। एहा बीणादि यन्त्ररे स्पष्टभावे लक्षित हुअन्ति। मनुष्यर कण्ठ प्रायशः कफदूषित होइथिबारु एगुड़िक स्पष्टभावे लक्षित होइपारे नाहिँ। ३३।

**अथ स्वराणां मातरः—**

**विशाला-सुमुखी-नान्दी-बिचित्राः षड्जमातरः (४)**
**घना-चित्रा-गलनिका-ऋषभ-स्वरमातरः (३)**
**माला च सरघा चैव व्यक्ते गान्धारमातरौः (२)**
**मातंगिका च मैत्रेयी शिवा मागधिका तथा**
**एताश्चतस्रः श्रुतयो मध्यम स्वरसाधिकाः (४)**
**बाला कला कलरबा शार्ङ्गरवापि पंचमम् (४)**
**जनयन्ति, रसामाताऽमृता तिस्रश्च धैवतम् (३)**
**निषादनामनि द्वे च विजया मधुकर्यपि (२)**
**इति स्वराणां श्रुतयो मातरः परिकीर्त्तिताः ॥ २२**
**एतासां नामान्तरमप्यस्ति देशभेदेन ।**

केउँ श्रुतिमाने केउँ स्वरर उत्पादिका ओ सेमानङ्कर देबता :—

| स्वरर नाम | उत्पादिका श्रुतिमानङ्कर नाम | संख्या | देबता |
|---|---|---|---|
| षड्ज | बिशाला, सुमुखी, नान्दी ओ बिचित्रा | ४ | प्रजापति |
| ऋषभ | घना, चित्रा, गलनिका | ३ | अग्नि |
| गान्धार | माला ओ सरघा | २ | अमृत |
| मध्यम | मातङ्गिका, मैत्रेयी, शिबा, मागधिका | ४ | पृथ्वी |
| पञ्चम | बाला, कला, कलरबा, शार्ङ्गरबा | ४ | साम |
| धैबत | रसा, माता, अमृता | ३ | कुबेर |
| निषाद | बिजया, मधुकरी | २ | यम |
| स्वर ७ | | २२ | ७ |

श्रुतीनां दैवतमाह संहितायां—

प्रजापत्यग्निपीयूषपृथ्वीसामकुवेरकाः ।
यमश्चैव क्रमेणैव देवताः परिकीर्त्तिताः । ३४ ।

एठारे श्रुतिमानङ्कर येउँ नाम दिआगला, ताहा उत्कल देश प्रचलित नाम । देशभेदरे एहि नामर मध्य भेद होइथाए । ३४ ।

स्वराणां च श्रुतीनां च भेदो नैवात्र लक्ष्यते ।
सूक्ष्मत्वाज्जलमध्ये तु मीनमार्गो यथा तथा । ३५ ।

श्रुति ओ स्वरमानङ्कर परस्पर भेद अति सूक्ष्म होइथिबारु बारि हुए नाहिँ । जलमध्यरे मीनर गति केहि जाणि पारे कि ? ३५ ।

तथा च मुनिः सोमेश्वरः—

श्रुतिस्थाने स्वरान् वक्तुं नालं ब्रह्माऽपि तत्त्वतः ।
* जलेषु चरतां मार्गो मीनानां नोपलक्ष्यते । ३६ ।

मुनि (सोमेस्वर) कहिछन्तिः—ब्रह्मा मध्य कौणसि निर्द्दिष्ट श्रुतिर स्थानरे समुचितभाबे स्वरर उच्चारण करिपारिबे नाहिँ । जलरे बिचरण करुथिबा माछमानङ्कर गतिपथ निर्णय करि हुए नाहिँ । ३६ ।

एवं श्रुतीरुक्त्वा स्वरानाह, मुनिः—

स स्वरो यः श्रूतिस्थाने स्वरान् हृदयरंजकः (?)
किं च श्रोतृमनो यस्माद्रञ्जयन्ति ततः स्वराः ।

के त इत्याह मुनिः—

षड्जर्षभौ च गांधारो मध्यमः पंचमस्तथा ।
धैवतश्च निषादश्च स्वराः सप्त प्रकीर्त्तिताः ।
स रि ग म प ध नि श्चेत्येतेषामपराभिधा । ३७ ।

---

* तथाहि नारदः—यथाप्सु चरतां मार्गो मीनानां नोपलभ्यते
आकाशे वा विहंगानां तद्वत् स्वरगता श्रुतिः ।
यथा दधनि सर्पिः स्यात् काष्ठस्थो वा यथानलः
प्रयत्नेनैव लभ्येत तद्वत स्वरगता श्रुतिः ।

श्रुति बिषयरे कुहागला। एबे स्वर बिषयरे कुहायाउछि :—याहा झटिति श्रोतार मनोरञ्जन करे ताहा स्वर। एहा सातगोटि । यथाः—षड्ज, रुषभ, गान्धार, मध्यम, पंञ्चम धैबत, निषाद। एमानङ्कर साङ्केतिक संज्ञा यथाक्रमे स, रि, ग, म, प, ध, नि अटे। ३७।

* भेदमाह—

**ते त्रिधा स्युर्मन्द्रमध्यतारभावं समाश्रिताः।**
**त्रीणि स्थानानि तेषां हि हृदि मन्द्रोऽभिधीयते**
**कंठे मध्यो मूर्द्धि तारो द्विगुणस्तूत्तरोत्तरं। ३८।**

सेमानङ्कर भेदः—प्रत्येक स्वर मन्द्र, मध्य ओ ताररुपे ध्वनित होइ तिनिप्रकार हुअन्ति। मन्द्र प्रभृति तिनिप्रकार स्वरर उत्पत्ति स्थान तिनि गोटि। यथा—हृदय-प्रदेशरे मन्द्र, कण्ठरे मध्य ओ मूर्द्धारे तारर उत्पत्ति हुए। मन्द्रठारु मध्यर उच्चारण-कालर परिमाण दुइगुण ओ मध्यठारु तारर उच्चारणकाल-परिमाण दुइ गुण अटे। ३८।

**षड्जस्वरः—**

**हृदं (?) कंठं तथा नासां तालुकां दन्तजिह्विकाम्।**
**स्पृशन् षड्भ्यः समुत्पन्नस्तस्मात् षड्जः स उच्यते। ३६।**

**नारदसंहितायां च—**

**बायुः सम्मूर्च्छितो नाभेर्नाड्याश्च हृदयस्य च।**
**पार्श्वयोर्मस्तकस्यापि षण्णां षड्जः प्रजायते। ४०।**

षड्जस्वरः—हृदय, कण्ठ, नासा, तालु, दान्त ओ जिभ एहि छअगोटि स्थानकु स्पर्श करि एहि स्वर जात हेउथिबारु एहाकु षड्ज कहन्ति। नारदसंहितारे षड्जर लक्षण लेखा होइछि—नाभिमण्डल, नाडी, हृदयर दुइपार्श्व ओ मस्तक एहि स्थान मानङ्करु बायु जात होइ एहि स्वरकु जात करे। ३९।४०।

**ऋषभस्वरः—**

**नाभिमूलाद् यदा वर्ण उद्गतः कुरुते ध्वनिं।**
**ऋषभस्येव निर्याति हेलया ऋषभः स्मृतः। ४१।**

ऋषभ स्वर—नाभिस्थलरु कौणसि ध्वन्यात्मक बर्ण्ण उद्गत होइ बृषभर ध्वनि परि ध्वनि करि अनायासरे निर्गत हेले ताहाकु ऋषभ स्वर कहन्ति।४१।

---

* संगीतरत्ने तु—मन्त्रो (न्द्रो) ऽपि घोर इत्युक्तस्तारो गांधार उच्यते इत्यनेन मन्द्रस्य घोर इति संज्ञा कृता।

**गांधारस्वरः—**

**नाभेः समुद्गतो वायुर्गलं श्रोत्रे च चालयेत् ।**
**सशब्दं येन निर्याति गांधारस्तेन कथ्यते । ४२ ।**

गान्धार स्वरः—नाभिमध्यरु बायु बाहारि गला एवं कानदुइटि संचालित करि ध्वनिसहकारे उद्गत हेले ताहाकु गान्धार स्वर कहन्ति । ४२ ।

**मध्यमस्वरः—**

**मध्यमो मध्यमस्थानाच्छरीरस्योपजायते ।**
**नाभिमूलाच्च गंभीरः किंचित्तारस्वरूपकः । ४३ ।**

मध्यम स्वरः—शरीरर मध्यभागरु जात बायुद्वारा मध्यमस्वर उत्पन्न हुए । नाभिमूलरु उत्पन्न हेले एहा गम्भीर ओ टिकिए तार रूपकु प्राप्त हुए । ४३ ।

**पंचमस्वरः—**

**प्राणोऽपानसमानश्चोदानश्च व्यान एव च ।**
**एतेषां समवायेन जायते पंचमः स्वरः । ४४ ।**

पञ्चमस्वरः— प्राण, अपान, समान उदान ओ व्यान, एहि पाञ्च बायुर सम्मिश्रणरे पञ्चमस्वरर उत्पत्ति हुए । ४४ ।

**धैवतस्वरः—**

**गत्वा नाभेरधोभागं बस्तिं प्राप्योर्द्ध्वगः पुनः ।**
**धावन्निव च यो याति कंठदेशं स धैवतः । ४५ ।**

धैबतस्वरः—नाभिरु उद्गत नाद अधोमार्गरे बस्तिदेश पर्य्यन्त याइ सेठारु अति द्रुतगतिरे कण्ठदेशकु गमन कले ताहाकु धैबत स्वर कहन्ति । ४५ ।

**निषादस्वरः—**

**षड्जादयः षड़ेतेऽत्र स्वराः सर्वे मनोहराः ।**
**निषीदन्ति यतो लोके निषादस्तेन कथ्यते । ४६ ।**

**इति सप्तस्वर निरूपणम् ।**

निषादस्वरः—स, रि, ग, म, प, ध एहि षट्स्वरर मिलनकु निषादस्वर कहन्ति । ४६ ।

साम्यमाह—

मयूरः षड्जमाख्याति ऋषभं बक्ति चातकः।
छागो बदति गांधारं क्रौंचो बदति मध्यमम्। ४७।
कोकिलः पंचमं ब्रूते भेको बदति धैबतम्।
निषादं भाषते हस्तीत्येतद् ब्रह्मादिसम्मतम्। ४८।

शिवसंहितायां—

मयूर–ऋषभ--छाग--क्रोष्टृ--कोकिलवाजिनः।
मातंगश्च क्रमेणाहुः स्वरानेतान् सुदुर्गमान्। ४६।

स्वरर साम्यः—मयूरर स्वर षड्ज, चातकर स्वर ऋषभ, छेलिर स्वर गान्धार, बगर स्वर मध्यम, कोकिलर स्वर पञ्चम, बेङ्गर स्वर धैबत एवं हस्तीर स्वर निषाद स्वरसङ्गे समान। शिब संहितारे किन्तु एहा अन्यरूपे बर्ण्णित होइअछि। यथा—मयूर, बृषभ, छेलि, बिलुआ, कौइलि घोड़ा ओ हाती यथाक्रमे स, रि, ग, म, प, ध, नि एहि सप्तस्वरकु ध्वनित करन्ति। ४७।

ते बादिसंबादिबिवाद्यनुवाद्यभिधाः पुनः।
स्वराश्चतुर्बिधाः प्रोक्तास्तत्र बादी स कथ्यते। ५०।

आहुरि मध्य बादी, संबादी बिबादो ओ अनुबादो भेदरे स्वरकु चारि श्रेणोरे बिभक्त करायाए। बादिस्वर—अंशस्वरकु बादी कुहायाए। ५०।

संबादिस्वर :—

यस्य प्रयोगबाहुल्यं यो रागं बक्ति निश्चयम्।†
समश्रुतिस्तु संबादी पञ्चमस्य न मः क्वचित्। ५१।

संबादि-स्वरः—गीतरे याहार प्रयोग बहुलभाबे थाए, ये रागकु निश्चितभाबे जणाइदिए एवं येउँमानङ्कर श्रुति समान सेमाने संबादि-स्वर। किन्तु पञ्चम ओ मध्यम समानश्रुतिबिशिष्ट हेलेहें से दुहें परस्पर संबादो नुहन्ति। ५१।

बिबादिस्वर :—

प नी बिबादिनौ स्यातां रिधयोर्वापि तौ तयोः
अनुवादी भवेच्छेष इति दभिलसम्मतं। ५२। *

---

† तत्र यो यत्रांशः स तस्य बादी इति भरत नाट्यशास्त्रं बक्ति रागादि निश्चयम् इति हरिनायकः।

* "इति दत्तिलसंम्मतं" इति हरिनायकः। दन्तिल इति वा पाठः।

**बादी राजा तथामात्यः संवादी रिपुरेव च**
**बिवाद्यनुचरो ज्ञेयोऽनुबादीति मुनेर्मतं । ५३ ।**

बिवादी ओ अनुबादिस्वर—पञ्चम ओ निषाद स्वर दुहेँ ऋषभ ओ धैबत स्वरर बिबादी रि ओ ध मध्य प ओ निर बिबादी । अन्य स्वरगुडिक अनुबादी । एहा दभिल (दन्तिल बा दत्तिल)ङ्क मत । बादिस्वर राजा,. संबादी मन्त्री, बिबादी रिपु, अनुबादी भृत्यस्वरूप अटन्ति । ५२ । ५३ ।

**ग्रहांशन्यासभेदेन भवन्ति त्रिविधाः स्वराः ।**
**ग्रहस्वरः, अंशस्वरः, न्यासस्वरः, एवं प्रकारेण त्रिविधः ।**

**तत्रादौ ग्रहस्वरमाह :—**
**ग्रहस्वरः स विज्ञेयो यो गानादौ नियोजितः । ५४ ।**

ग्रहादि भेदः—ग्रह, अंश ओ न्यास भेदरे स्वर आउ तिनि प्रकाररे विभक्त हुए ।
ग्रह स्वरः—येउँ स्वररे गान आरम्भ करायाए । ५४ ।

**अंशस्वरमाह :—**
**यो रञ्जको भवेद्गाने स्वरा यस्यानुगामिनः ।**
**यो वै ग्रहत्वमापन्नो न्यासादीनां प्रयोगतः ।**
**गाने यस्य च बाहुल्यमंशो बाद्येव भूपबत् । ५५ ।**

अंशः—याहा गानरे प्रचुर भाबे व्यवहृत हुए, ओ अन्यान्य स्वर याहार अनुगामी हुअन्ति, याहा लोकमानङ्कर मनोरञ्जन करे एवं याहा न्यास अपन्यास प्रभृतिर प्रयोगद्वारा ग्रहस्वररूपे परिचित, ताहा अंश स्वर ओ बादी बोलि परिचित हुए। एहा स्वरमानङ्क मध्यरे राजा । ५५ ।

**न्यासस्वरमाह :—**
**न्यासस्वरः स विज्ञेयो यो गानपरिणामकृत् । ५६ ।**

**एवं स्वरभेदानुक्त्वा क्रमप्राप्तं ग्राममाह—**

न्यासस्वर—गीत यहिँरे शेष हुए ताहा न्यासस्वर अटे । ५६ ।

*** ग्रामः स्वराणामतिसूक्ष्मभाव–संयोजनस्थानकुलं त्रिधा सः ।**
**षड्जस्तथा मध्यम एव भूम्यां गान्धारनामा किल देवलोके ।५७।**

ग्रामः—येउँ स्थानमानङ्करे स्वरमानङ्कर अति सूक्ष्मभावे संयोग करायाइथाए ताहाकु ग्राम कहन्ति । ५७ ।

षड्ज, मध्यम ओ गान्धार नामरे एहा तिनि प्रकार । एथि मध्यरु प्रथम दुइगोटि मर्त्त्यरे व्यवहृत हुए, अन्यटि देवलोकरे प्रचलित ।

**किंच –**

**स्वराणां सुव्यवस्थानां समूहो ग्राम इष्यते ।५८।**

स्वरमानङ्कर सुव्यबस्थितभावे एकत्र अबस्थानकु ग्राम कुहायाए बोलि काहारि काहारि मत ।५८।

**तत्र च –**

**पञ्चमश्चेन्निर्विकारी षड्जग्रामस्तदा भवेत् ।**
**उपान्तश्रुतिसंस्थश्चेत् पञ्चमो मध्यमस्तदा ।५९।**

षड्जग्राम—पञ्चम स्वर अबिकृत ( शुद्ध ) अबस्थारे थिले ताहा षड्जग्राम नामरे कथित हुए ।

**पञ्चमस्वर उपान्तश्रुतिनिकटे बिद्यमानस्तदा मध्यमो भबति ।**

मध्यमग्रामः—उपान्तश्रुति निकटरे अबस्थित थिबा पञ्चम स्वर मध्यम ग्राम नामरे अभिहित हुए ।५९।

**गान्धारो देवगेयत्वान्न मयात्रोपबर्ण्णितः।**
**जातिभिः श्रुतिभिश्चैब स्वरा ग्रामत्वमागताः ।६०।**

गान्धार ग्रामः—एहा देबलोकरे प्रचलित । तेणु एठारे ताहार लक्षणादि निर्देश कलु नाहिँ । जाति श्रुतिद्वारा स्वरमाने रागरूप धारण करन्ति । ६० ।

---

* मन्द्रादयस्ते प्रत्येकं बिभक्ताः सप्तभिः स्वरैः । षड्जादिभिः समूहाच्च स्वराणां ग्रामनामकाः । सं,रत्नं । मन्त्र (मन्द्र) मध्यताराख्याः त्रयो ग्रामाः भाषासु "उदारा-मुदारा-तारा" इति यथाक्रममभिधीयन्ते । मन्द्रनादस्तु घोर इत्युच्यते । मन्द्रजो ग्रामः षड्ज इति, तारजो ग्रामः गान्धार इत्युच्यते ।

एवं ग्राममुक्त्वेदानीं मूर्छना उच्यते ।

† मूर्छनालक्षणमाह :—

स्वरः सम्मूर्च्छितो यत्र रागतां प्रतिपद्यते
मूर्च्छनामेव तामाहुर्मुनयो ग्रामसंभवाम् । ६१ ।

मूर्च्छनाः—यहिँरे स्वरर प्रयोग हेले ताहा (स्वर) रागरे परिणत हुए, ताहाकु मूर्च्छना कहन्ति । ६१ ।

सप्तस्वरविभेदेन त्रिग्रामेष्वेकविंशतिः ।
सप्तैव मूर्च्छनास्तत्र प्रतिग्रामं प्रकीर्त्तिताः । ६२ ।

प्रति ग्रामरे येपरि षड्जादि सप्त स्वर अछि, सेहिपरि प्रति ग्रामरे सात गोटि करि मूर्च्छना मध्य अछि । तेणु मूर्च्छनासंख्या एकोइश गोटि । ६२ ।

षड्जग्राममूर्च्छना यथा :—

षड्जान्निषादान्तं नेर्धान्तं धात्पान्तमिष्यते ।
पान्मान्तं मध्यमाद्गान्तं गान्धाराद्दृषभान्तकम् । ६३ ।
ऋषभात् सान्तमित्याहुः षड्जग्रामस्य मूर्च्छनाः '
अथोच्यन्ते सुबोधाय मध्यमग्राममूर्च्छनाः । ६४ ।
माद्गान्तं गाच्चर्षभान्तमृषभात् सान्तमिष्यते
सान्न्यन्तं नेर्धैवतान्तं धात् पान्तं पाच्च मान्तकम् । ६५ ।

गान्धाररागस्य देवगेयत्वात् तस्य मूर्च्छना न लिखिताः ।

एतासां नामानि—

षड्जग्राममूर्च्छनानां नामान्याह, शिवसंहितायाम्—

ललिता मध्यमा चित्रा रोहिणी च मतंगजा
सौवीरा वर्णमध्या च षड्जग्रामस्य मूर्च्छनाः । ६६ ।

---

† क्रमात् स्वराणां सप्तानामारोहश्चावरोहणं । सा मूर्छा ... ... ... ... ... ... । हनूमन्मते—षड्जादिस्वरत ऋषभादिस्वरोत्थाने यत्र स्वरो विरमति सा मूर्च्छना । भरतमते—वादनस्य गानस्य वा समये हस्तस्य गलस्य वा कंपनं सा मूर्छा ।

षड्‌ज ग्रामर मूर्च्छनाः—

| संख्या | | | नाम |
|---|---|---|---|
| १ म | स' ठारु मि' पर्य्यन्त | स, रि, ग, म, प, ध, नि | ललिता |
| २ य | नि' ठारु ध' पर्य्यन्त | नि, स, रि, ग, म, प, ध | मध्यमा |
| ३ य | ध' ठारु प' पर्य्यन्त | ध, नि, स, रि, ग, म, प | चित्रा |
| ४ र्थ | प' ठारु म' पर्य्यन्त | प, ध, नि, स, रि, ग, म | रोहिणी |
| ५ म | म' ठारु ग' पर्य्यन्त | म, प, ध, नि, स, रि, ग | मतङ्गजा |
| ६ ष्ठ | ग' ठारु रि' पर्य्यन्त | ग, म, प, ध, नि, स, रि | सौवीरा |
| ७ म | रि' ठारु स' पर्य्यन्त | रि, ग, म, प, ध, नि, स | बर्णमध्या |

**मध्यमग्राममूर्च्छनानां नामान्याहः—**

**मत्सरी मृदुमध्या च शुद्धान्ता च कलाबती**
**तीव्रा रौद्री तथा ब्राह्मी मध्यमग्राममूर्च्छनाः । ६७ ।**

**गान्धारग्राममूर्च्छनानां नामान्याहः—**

**वैष्णबी खेचरी चैब वरा नादा यती तथा**
**बिशाला च बिचित्रा च गान्धारग्राममूर्च्छनाः । ६८ ।**
**एकबिंशतिरित्युक्ता मूर्च्छनाश्चन्द्रमौलिना ।**

**मूर्च्छनाप्रयोजनमाहः—**

**शिबाग्र मूर्च्छनां दत्त्वा ब्रह्महत्यां ब्यपोहति । ६९ ।**

मध्यम ग्राम मूर्च्छनाः—

| संख्या | | | नाम |
|---|---|---|---|
| १ म | म' ठारु ग' पर्य्यन्त | म, प, ध, नि, स, रि, ग | मत्सरी |
| २ य | ग' ठारु रि' पर्य्यन्त | ग, म, प, ध, नि, स, रि | मृदुमध्या |
| ३ य | रि' ठारु स' पर्य्यन्त | रि, ग, म, प, ध, नि, स | शुद्धान्ता |
| ४ र्थ | स' ठारु नि' पर्य्यन्त | स, रि, ग, म, प, ध, नि | कलाबती |
| ५ म | नि' ठारु ध' पर्य्यन्त | नि, स, रि, ग, म, प, ध | तीव्रा |
| ६ ष्ठ | ध' ठारु प' पर्य्यन्त | ध, नि, स, रि, ग, म, प | रौद्री |
| ७ म | प' ठारु म' पर्य्यन्त | प, ध, नि, स, रि, ग, म | ब्राह्मी |

गान्धार ग्रामर मूर्च्छनार स्वरूप एठारे दिआगला नाहिँ । कारण एहा केवल स्वर्गरे प्रचलित । तेणु निम्नरे केवल नामगुड़िक दिआगला ।

(१) वैष्णवी, (२) खेचरी, (३) वरा, (४) नादा, (५) वती, (६) विशाला, (७) विचित्रा ।

एहि एकोइश गोटि मूर्च्छना चन्द्रशेखर शिब कहिअछन्ति ।

मूर्च्छनार फलः — शिवङ्क सम्मुखरे मूर्च्छना देले ब्रह्महत्यारु मुक्ति मिले । ६९ ।

***अथ क्रमप्राप्तास्ताना उच्यन्तेः—**

**मूर्च्छनाशेषसंपन्नाः प्रयोगप्रतिपादकाः**
**ऊनपञ्चाशदाख्यातास्तानाः स्वरसमुद्भवाः । ७० ।**
**कूटताना भवन्त्यन्ये तेभ्य एव भवन्ति हि**
**तानाः पञ्च सहस्राणि त्रयस्त्रिंशाद्भवन्ति हि । ७१ ।**

तानः — मूर्च्छनार शेषरे रागरागिणीर बिस्तारकु तान कुहायाए । एहि प्रति स्वररे सात सात गोटि । तेणु एहार संख्या ४९ । मूर्च्छना देइ सारि प्रयोग — अर्थात् स्वरमानङ्कर क्रम रागरागिणीर विस्तारकु प्रतिपन्न कराइ देबाभलि क्रियाकु तान कहन्ति । एतद्‌व्यतीत नानाप्रकार कूटतान अछन्ति । सेमानङ्कर संख्या ५०३३ । ७०—७१

---

* गीतावयवीभूतं धातुमनुच्चार्य्य षड्जादि स्वरान् किंबा कमपि स्वरवर्णमवलम्ब्य सस्वरकम्पं सारोहावरोहं रागाणां बिस्तारकरणं तानाः त्रिभिस्तदधिकैर्वा स्वरैश्च भवति । अन्यथा न ।

सङ्गीतसारे तुः—मूर्च्छना एव तानाः स्युः शुद्धा आरोहणाश्रिताः ।
तेषां भूरितरा भेदाः कस्तान् कात्स्न्येंन बक्ष्यति ॥
तत्र भेदप्रत्ययार्थं शुद्धान् कतिपयान् ब्रुवे ।
एकस्वरो द्विस्वरश्च त्रिस्वरश्च चतुःस्वरः ॥
पञ्चस्वरः षट्‌स्वरश्च सप्तस्वर इतीरिताः ।
तानाः सप्त क्रमात्तेषां नामान्यत्र प्रचक्षते ॥
आर्चिको मान्त्रिकश्चैव सामिकश्च स्वरान्तरः ।
औडवः षाड़बश्चैव संपूर्णश्चैव तादृशः ॥

तानप्रयोजनमाहः—

अग्नीषोमीकतानेन शिवं स्तुत्वा शिवो भवेत् । ७२ ।

अग्नीषोमिक तानरे शिवङ्कर स्तुति कले लोक शिबत्व प्राप्त हुए । ७२ ।

अथ वर्णमाहः—

स्वरो गानक्रियारम्भप्रयुक्तो वर्णं उच्यते ।

स्थाय्यारोह्यवरोही च संचारोति चतुर्विधः । ७३ ।

बर्णः—गानर आरम्भरे करायाउथिबा स्वरर नाम बर्ण। एहा स्थायी, आरोही, अबरोही ओ सञ्चारी भेदरे चारि प्रकार । ७३ ।

प्रत्येकं लक्षणमाहः—

स्थायं स्थायं प्रयोगेषु वक्ति रागादिनिश्चयं

स्थायिवर्ण्णः सविज्ञेयः परावन्वर्थसंज्ञकौ ।

अबरोहतीति अबरोही । आरोहतोति आरोहो । ७४ ।

स्थायिवर्ण्णः—कौणसि रागर प्रयोगकालरे येउँ स्वर वारम्बार प्रयुक्त हेउथाए ताहा स्थायिबर्ण ।

आलापः—येउँ स्वररे आरम्भ करायाइथाए सेहि स्वररे शेष करिबार नाम स्थायो ।

अबरोहीः—उपरकु चढ़िगले आरोही, तलकु खसि आसिले ताहाकु अबरोहो कहन्ति । ७४ ।

एतत्सम्मिश्रणाद्वर्ण्णः सञ्चारीति निगद्यते ।

वर्ण्णा भवन्त्यलङ्कारा रचनायां विशेषतः । ७५ ।

षड्विंशतिः स्थायिनः स्युः रोहिणो द्वादशैव तु ।

संचारिणो द्वादशैव द्वादशैवावरोहिणः ।

इति प्रसिद्धालङ्कारा एकषष्टिः प्रकीर्त्तिताः । ७६ ।

अलङ्कार प्रयोजनमाहः—

स्वरज्ञाने दृढाभ्यासो भक्तिलाभश्च जायते

वर्ण्णगानविचित्रत्वमलङ्कारप्रयोजनम् । ७७ ।

एमानङ्कर सम्मिश्रणकु सञ्चारी कहन्ति। रचनार बैशिष्टय थिले एहि बर्ण्णमाने अलङ्कार नाम धारण करन्ति। स्थायी अलङ्कार २३ गोटि। आरोही अलङ्कार १२ गोटि। अबरोही अलङ्कार १२ गोटि। सञ्चारी अलङ्कार १२ गोटि। स्वरज्ञानरे दृढ़ अभ्यास, भक्तिलाभ वर्ण्ण एवं गानर वैचित्र्यहिँ अलङ्कारर प्रयोजन। ७५—७७।

* क्रमप्राप्तां जातिमाहः—

शुद्धाः स्युर्जातयः सप्त षड्जादिस्वरभेदतः। ७८।

किंरूपा इत्यत आहः—

षाड्जर्षभी च गान्धारी माध्यमी पञ्चमी तथा
धैबती च निषादी च संप्रोक्ताः शुद्धजातयः। ७९।

शुद्धाभिर्विकृताभिश्च मिलित्वा जातयः पुनः
अष्टादश समुद्दिष्टास्ता रागाणां च मातरः। ८०।

---

* रागस्तु जायते यस्याः सा जातिरभिधीयते।

बिकृता जातयः—षड्जकैशिकी षड्जोदीच्यबा षड्जमध्यमा
गान्धारोदीच्यबा रक्ता गान्धारीकैशिकी तथा
मध्यमोदीच्यबा रक्ता गान्धारी कैशिकी तथा
मध्यमोदीच्यबा कार्मारबी गान्धरपञ्चमा
तथा चान्ध्री नन्दयन्तीत्येकादशभिदाः स्मृताः। सङ्गीतसारः।

षड्ज मध्यमाभ्यां निष्पन्ना—षड्जमध्यमा
षाड्जी गान्धारीभ्यां धैबत्यास्च संसर्गात् निष्पन्ना—षड्जोदीच्यबा।
षाड्जीगान्धारीभ्यां निष्पन्ना—षाड्जी कैशिकी।
षाड्जीगान्धारीभ्यां धैबत्या मध्यमायास्च योगात्—मध्यमोदीच्यबा
गान्धारी पञ्चमी नैषादी मध्यमाभी—रक्तगान्धारी
गान्धारी षाड्जीभ्यां संसर्गात्—आन्ध्री
गान्धारी पञ्चमीभ्यामार्षभीभ्यां च—नन्दयन्ती
नैषाद्यार्षभीभ्यां पञ्चम्याः संसर्गात्—कर्मारवी
गान्धारी पञ्चमीभ्यां—गान्धारी पञ्चमी
धैबत्यार्षभीरहिता अन्योन्यास्च जातयः बैषम्यं कुर्य्युः।

जातिः—षड्जादि स्वरभेदरे जाति ७ गोटि। यथाः- षाड़जी, आर्षभी, गान्धारी, मध्यमा, पञ्चमी, धैबती, निषादी। एहि सातगोटि शुद्ध जाति। एतद्व्यतीत आउ ११ गोटि बिकृत जाति अछन्ति। अतएब सर्वमोट १८ गोटि जाति राग उत्पादन करिथाआन्ति। ७८—८०।

इति श्रीमद्वीराधिवीरवर श्रीगोपीनाथ भञ्ज महाराज तनुज श्रीमद्वीरवर राजकुमार
श्री हरिचन्दन बिरचितायां सङ्गीतमुक्ताबल्यां
नाद-श्रुति-स्वर-ग्राम-मूर्च्छना-तान-बर्ण्ण-जाति निरूपणं नाम
प्रथम-ग्रथनम्।

---

# द्वितीय ग्रथनं

**अथ प्रथमोद्दिष्टं सङ्गीतमूलभूतं गीतलक्षणमाह ।**

**गीतलक्षणं सङ्गीतकौमुद्यां—रागैर्बिरचितं गीतं, तन्न; तर्हि निरर्थक हूंकारादीनामपि गीतत्वोपलम्भात् । १ ।**

प्रथमे सङ्गीत बिषयरे कुहायिबा एहि ग्रन्थर मुख्य उद्देश्य बोलि धरायाइ थिबारु बर्त्तमान सङ्गीतर मूलस्वरूप गीतर निरूपण करागला । सङ्गीत कौमुदीरे "रागरे बिरचित ये, ताहा गीत बोलि लेखा अछि । एपरि लक्षण स्वीकार कले अर्थशून्य (राग क्रमरे) बोलयाउथिबा "हुँ"कारकु मध्य गीत बोलि स्वीकार करिबाकु पड़िब । १ ।

**गीत प्रकाशे यदुक्तं रञ्जकस्वरसंदर्भो गीतमिति तच्चिन्त्यं । तदा तेन्नकादीनामपि गीतत्वापत्तिः स्यात् । २ ।**

गीत प्रकाशरे मध्य कण्ण ओ मनकु रञ्जाइदेबा भलि स्वरसमूहकु गीत कुहायाए बोलि लेखा होइअछि । ताहा मध्य चिन्ता करिबार बिषय (अर्थात् भुल) कारण ताहा हेले तेन्नादि (अलङ्कार) मानङ्क गीत बोलि कुहायिब । २ ।

**वस्तुतः सङ्गीतसारमतं सम्यगाभाति ।**
**यदुक्तं:—गीतं रञ्जकधातुमातुसहितं इति । ३ ।**

प्रकृतरे कहिबाकु गले सङ्गीतसार मतहिँ समीचीन । सेथिरे धातु मातु-युक्त हृदय-रञ्जक स्वर गीत बोलि लेखा अछि । ३ ।

**वस्तुतस्तु नारदसंहितायामपि तथादर्शनात् ।**
**धातुमातुसमायुक्तो रञ्जकस्वरसंचयः**
**गीतमित्युच्यते तज्ज्ञैमुनिभिर्भरतादिभिः ।**
**तत्र नादात्मकं गेयं धातुरित्यभिधीयते इति यदुक्तं, तन्न ।**
**सर्वेषां श्रुतिस्वराणां नादात्मकत्वात् । ४ ।**

नारद संहितार मत मध्य ताहाहिँ, किन्तु सेथिरे 'धातुर लक्षण' नादात्मक 'गान' बोलि याहा लेखा अछि ताहा ठिक नुहे । कारण श्रुति स्वर प्रभृति समस्ते नादात्मक अटन्ति । अतएब सेमानङ्कु मध्य गीत बोलि कुहायिब । ४ ।

**वस्तुतस्तु—**

**गुणादिधारणाद्धातुर्गीतावयव एव सः । ५ ।**

धातुर लक्षणः—गुण प्रभृतिकु ये धारण करे से धातु, ताहा गीतर घटक पदाबली । ५ ।

**मातुमाहः—**

**गुणालङ्कारवाक्येषु रञ्जनौजस्विता यदि**
**मातुः स कथितस्तज्ज्ञैर्मानमस्य प्रमोदनात् । ६ ।**

मातु लक्षण - गुण अलङ्कारमय वाक्यरे हृदयरञ्जकता ओ ओजस्विता थिले ताहाकु मातु बोलि कहन्ति । एहा हृदयर आनन्दवर्द्धन द्वारा निजे निजकु प्रमाणित करे । ६ ।

**वस्तुतस्तु ब्रह्मसंहितायां—**

**गीतस्यावयबो धातू रागादिर्मातुच्यते । ७ ।**

ए विषयरे ब्रह्मसंहितार मतहिँ ठिक् । सेथिरे अछि ये गीतर अबयबकु (पद, बाक्य, गुण, अलङ्कारादि) धातु ओ रागादिकु मातु कहन्ति । ७ ।

**एवं गीतलक्षणं निरूप्य मातुरूपा रागाद्यो निरूप्यन्ते ।**

**शिब संहितायांः—**

**ये रञ्जयन्ति चेतांसि जगत्त्रितयवासिनां**
**ते रागा इति विख्याताः शृणु देवि जगत्त्रये । ८ ।**

गीत लक्षण कुहागला । एबे मातुरूपक रागादि निरुपण करायाउअछि । शिव संहितारे लेखा अछिः - येउँमाने तिनिलोकवासीङ्क हृदयकु रागरञ्जित करन्ति, सेमाने राग बोलि कथित । ८ ।

**तेषामुत्पत्तिप्रकारमाहः--**

**रासक्रीड़ानुरक्ताभिर्गोपीभिर्गीतमीरितं**
**तदा रागाः समुत्पन्नाः सहस्राणि तु षोड़श । ९ ।**

सेहि राग गुड़िकु रासक्रीड़ा अनुरक्त षोल सहस्र गोपी प्रत्येक गोटिए गोटिए गान करिथिले । प्रत्येकङ्कर प्रति गीत गोटिए गोटिए रागरुपे प्रकाशित हेला । तेणु सेमानङ्कर संख्या हेला षोल हजार । ९ ।

**तेषु रागेषु बिख्याताः शतं रागास्तथाष्ट च**
**तेषु रागेषु षट्त्रिंशद्रागा जनमनोहराः । १० ।**

एहि षोल हजार रागमानङ्क मध्यरु एकशत आठगोटि राग प्रसिद्ध। आहुरि मध्य तन्मध्यरु छतिश गोटि राग भूलोकरे लोकमानङ्कर मनोहरण करि प्रसिद्धिलाभ करि अछि। १०।

**ते के इत्यत आह (प्रथमतः षट्त्रिंशद्रागा उच्यन्ते)—तेषां मध्ये षट् पुंरागाः । ११ ।**

एहि छतिशटि मध्यरु छअगोटि राग पुंराग ओ बाकी तिरिशगोटि स्त्रीराग वा रागिणी बोलि कथित। ११।

**ते के इत्यत आहः—**

**वसन्तो भैरवो मेघो नटनारायणस्तथा**
**श्रीरागो मालवश्चैव षट् पुंरागाः प्रकीर्त्तिताः । १२ ।**

पुंराग यथाः—वसन्त, भैरव, मेघ, नट-नारायण, श्रीराग, मालव। १२।

**तेषु वसन्तरागो निरूप्यतेः—नारदसंहितायां—**

**षड्जन्यासग्रहांशोऽयं षड्जमाध्यमिकोद्भवः**
**ज्ञेयो बसन्तः संपूर्णो वसन्तसमये वुधैः । १३ ।**

बसन्त राग—नारद संहिता मतरे—षड्जस्बर एहार ग्रहन्यास ओ अंशस्वर अटे। षड्ज मध्यम जातिरु एहा उत्पन्न। एहा "संपूर्ण अर्थात् सप्तस्वरविशिष्ट राग एवं बसन्तकालरे एहा गेय। १६।

**मूर्त्तिस्तु मतङ्गतन्त्रेः—**

**शिखण्डिबर्होच्चयबद्धचूड़ः**
**पुष्णन पिकं चूतलताङ्कुरेण ।**
**भ्रमन्मुदाराम बिहारमूर्त्ति—**
**मतो मतङ्गस्य वसन्तरागः । १४ ।**

बसन्त रागर मूर्त्ति—(मतङ्ग तन्त्रे)

चूडारे शोभुअछि कलापि पुच्छ। पिके अरपि चूतमुकुलगुच्छ ये।
भ्रमर उपबने होइ उषत। वसन्त मूर्त्ति सेहु मातङ्ग मत। १४।

**वसन्तस्य स्त्रियो यथाः—**

**आन्दोलिता च देशाख्या लोला प्रथममञ्जरी।**
**मह्लारी चेति रागिण्यो वसन्तस्यैब वल्लभाः। १५।**

वसन्तर स्त्रीगणः—आन्दोलिता (हिन्दोला) देशाख्या, लोला, प्रथममञ्जरी ओ मह्लारी। १५।

**तासां मूर्त्तयो यथाक्रमं लिख्यन्ते—**

**आन्दोलितैव भाषायां हिन्दोल इति उच्यते।**
**षड्‌जन्यासग्रहांशोऽयं रिपबर्ज्जौड़वो मता**
**† अधैबत्यार्षभोजातान्दोलिता कम्प्रमध्यमा। १६।**

आन्दोलिताः - षड्‌ज स्वर एहार ग्रहन्यास ओ अंशस्वर। ऋषभ ओ पञ्चम स्वर एथिरे न थाए। मध्यम स्वर एथिरे कम्पित हुए। भाषारे एहार नाम 'हिन्दोल'। १६।

**मूर्त्तिस्तु नारदसंहितायांः —**

**नितम्बिनोमन्दतरङ्गितासु दोलासु खेलासुखमादधाना।**
**खर्बः कपोतद्युतिकर्त्तुरश्रीर्हिन्दोलरागः कथितो**
**मुनीन्द्रैः। १७।**

नारद संहितोक्त मूर्त्ति—

मृदुहासिनो नितम्बिनी निकर। मन्दे दोलान्ति दोली वढ़ाइ कर ये।
तहिँ आरोहि सुखे हिन्दोल मज्जे। कपोतसम कान्ति खर्ब सहजे ये। १७।

---

† गान्धारपञ्चमाज्जाता देशाख्यर्षभबर्ज्जिता
गान्धारांशग्रहन्यासा शान्तशृङ्गारयोर्मता इति सङ्गीतसारे, ह. ना.

*अथ देशाख्या:—

गान्धारांशग्रहन्यासा देशाख्यर्षभवर्जिता ।

गान्धारपञ्चमाज्जातौड़वी शृङ्गारवीरयोः । १८ ।

देशाख्याः—गान्धार स्वर एहार ग्रह न्यास ओ अंशस्वर अटे। एथिरे ऋषभ स्वर न थाए। एहा गान्धारपञ्चमा जातिरु उत्पन्न। शृङ्गार ओ बीररसर उद्दीपनारे एहा प्रयोज्य।

मूर्त्तिस्तु भरते:—

आस्फोटनाविष्कृतरोमहर्षो
नियुद्धसन्नद्धविशालवाहुः ।
प्रांशुः प्रचण्डद्युतिहेमगौरो
देशाख्यरागः स हि मल्लराजः । १६ ।

मूर्त्तिः—

विशाल बाहु युगे मारि फुटुकि । पुलके भरि देइ अङ्गयष्टिकि ये ।
युद्ध निमन्ते सज होइ वाहार । चण्डतेजा देशाख्य मल्लप्रवर ये । १९ ।

अथ लोला:—

मध्यमांशग्रहा न्यासपञ्चमा षड्जकम्पिता ।

लोला षाड्जीसमुत्पन्ना संपूर्णा करुणे मता । २० ।

लोलाः—एहा सम्पूर्ण राग। करुण रसर उद्दीपना पाइँ उपयोगी। षाड्जी जातिरु उत्पन्न। पञ्चम एहार न्यास स्वर। एथिरे षड्ज स्वर कम्पित हुए। २०।

मूर्त्तिस्तु भरते:—

संकेतशालामधिगम्य दूत्या
सह स्वशय्यां परिकल्पयन्ति ।

---

* अधैवत्यार्षभीजाता—कैशिकीजातेरुत्पन्ना इत्यर्थः। तदुक्तं भरत नाट्यशास्त्रे—'धैवत्यार्षभहीनाः पञ्चान्याः कैशिकीं कुर्य्युः ।' इति। धैवतीं आर्षभीं च ज़ाती बिहाय अपरा पञ्चशुद्धजातयः मिलिताः सत्यः कैशिकीं नाम जातिं उत्पादयन्ति इत्यर्थः ।

